"कृतचूडस्तु कुर्वीत उदकं पिण्डमेव च।
स्वधाकारं प्रयुञ्जीत वेदोच्चारं न कारयेत्"—इति॥

मातापित्रोरुभयोरपि कुर्वीतेत्यर्थः। तथा च स्मृत्यन्तरम्,—

"कृतचूडोऽनुपेतस्तु पित्रोः श्राद्धं समाचरेत्।
उदाहरेत् स्वधाकारं न तु वेदाक्षराण्यसौ"—इति॥

यत्तु मनुनोक्तम्,—

"न ह्यस्मिन् युज्यते कर्म किञ्चिदामौञ्जिबन्धनात्।
नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते[१]"—इति॥

तत् त्रिवर्षकृतचूडाविषयम्। तथा च सुमन्तुः,—

"अनुपेतोऽपि कुर्वीत मन्त्रवत् पैतृमेधिकम्।
यद्यसौ कृतचूडः स्याद् यदि स्याच्च त्रिवत्सरः"—इति॥

अथ मातामहादिश्राद्धाधिकारनिर्णयः। तत्र व्यासः,—

"पितॄन्मातामहांश्चैव द्विजः श्राद्धेन तर्पयेत्।
अनृणः स्यात् पितॄणान्तु ब्रह्मलोकं च गच्छति"—इति॥

मातामहानामिति बहुवचनं मातुः पितामहप्रपितामहयो-र्पि[२] सङ्ग्रहार्थम्। तथा च पुलस्त्यः,—

"मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः।
तेषान्तु पितृवच्छ्राद्धं कुर्युर्दुहितृसूनवः"—इति॥

---

(१) मौञ्जिबन्धनमुपनयनम्। स्वधानिनयनं श्राद्धसम्पादकमन्त्रजातम्। स्वधा श्राद्धं निनीयते सम्पाद्यते अनेनेति व्युत्पत्तेः।

(२) पितामहप्रपितामहयोरित्यत्र मातुरिति पूरणीयम्। तेन, श्राद्ध-कर्त्तुः प्रमातामह-वृद्धप्रमातामहयोरित्यर्थः।

पितृश्राद्धवन्मातामहश्राद्धमपि नित्यं, अकरणे प्रत्यवायस्मरणात्। तदुक्तं स्कन्दपुराणे,—

"पार्वणं कुरुते यस्तु केवलं पितृहेतुतः।
मातामहान्न कुरुते पितृहा स प्रजायते"—इति॥

ऋष्यशृङ्गोऽपि,—

"पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम्।
अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेत्"—इति॥

मातामहश्राद्धं क्वचिदपवदति कात्यायनः,—

"कर्षूसमन्वितं मुक्त्वा तथा श्राद्धञ्च षोड़शम्।
प्रत्याब्दिकञ्च शेषेषु पिण्डाः स्युः षडिति स्थितिः"—इति॥

कर्षूसमन्वितं सपिण्डीकरणश्राद्धम्। षोड़शग्रहणमेकोद्दिष्टोपलक्षणार्थम्। सङ्घातमरणे श्राद्धक्रममाह ऋष्यशृङ्गः,—

"भवेद्यदि सपिण्डानां युगपन्मरणं तथा।
सम्बन्धासत्तिमालोच्य तत्क्रमाच्छ्राद्धमाचरेत्"—इति॥

अत्र पत्न्यादिसपिण्डेषु सम्बन्धासत्तिरेवं द्रष्टव्या। पतिपत्न्योः सम्बन्धः प्रत्यासन्नः, एकप्रतियोगिकत्वादव्यवधानाच्च[१]। पुत्रस्य तु मातापितृद्वयनिरूप्यत्वेन विलम्बितप्रतिपत्तेर्विप्रकृष्टः सम्बन्धः। भ्रातुस्तु पितृजत्वव्यवधानेन ततोऽपि विप्रकृष्टः। एवमन्यत्रोहनीयम्। पत्न्यादीनां पित्रोश्च सङ्घातमरणे ऋष्यशृङ्गः,—

---

(१) पतित्वं पत्नीमात्रनिरूप्यं, पत्नीत्वमपि पतिमात्रनिरूप्यमित्येकप्रतियोगिकत्वमतएवाव्यवहितत्वञ्च तत्सम्बन्धस्य।

"पत्न्याः पुत्रस्य तत्पुत्रभ्रातोस्तत्तनयस्य च।
स्नुषाम्बश्रोस्त पित्रोश्च सञ्जातमरणं यदि॥
अर्वागब्दाम्मातृपितृपूर्वं सापिण्ड्यमाचरेत्"—इति।

तत्पुत्रः पुत्रपुत्रः। तत्तनयो भ्रातृतनयः। यत्तु देवलेनोक्तम्,—

"पितरौ प्रमृतौ यस्य देहस्तस्याशुचिर्भवेत्।
न दैवञ्चापि पित्र्यञ्च यावत् पूर्णो न वत्सरः"—इति॥

तत्पूर्वोक्तपत्न्यादिव्यतिरिक्तसपिण्डविषयम्। अतएव लोगाक्षिः,—

"अन्येषां प्रेतकार्याणि महागुरुनिपातने।
कुर्यात् सम्वत्सरादर्वाक् श्राद्धमेकन्तु वर्जयेत्"—इति॥

प्रेतकार्याणि दहनादीन्याद्यश्राद्धान्तानि विवक्षितानि,

"आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि"—इति

विशेषस्मरणात्। एकमित्यन्यदित्यर्थः*(१)। पित्रोः सञ्जातमरणे देवलः,—

"पित्रोरुपरमे पुत्राः क्रियां कुर्युर्द्वयोरपि।
अनुवृत्तौ च नान्येषां† सञ्जातमरणेऽपि वा"—इति॥

---

* एकमित्येकस्य वर्ज्जयेदित्यर्थः,—इति मा०।
† वान्येषां,—इति मा०।

---

(१) तथाच पितृमातृमरणे वत्सरमध्ये पत्न्यादीनां दाहादि प्रेतकार्यं श्राद्धञ्च कर्त्तव्यमेव। पत्न्यादिभिन्नसपिण्डानान्तु दाहाद्याद्यश्राद्धपर्य्यन्तमेव कार्य्यं, न तेषां प्रेतश्राद्धमपि,—इति व्यवस्थानिष्कर्षः।

अनुगमनेन पित्रोः सङ्घातमरणे मातुरनुगमनेन दिनान्तर-मरणेऽपि तत्तद्द्वादशाहे क्रियां कुर्युः, अन्येषां पित्रोस्सु सङ्घात-मरणे यथाकालं न कुर्युः, किन्तु* त्रिपक्षएव। तदाह लौगाक्षिः,—

"पत्नी पुत्रस्तथा पौत्रो माता तत्पुत्रका अपि† ।
पितरौ च यदैकस्मिन् म्रियेरन् वासरे तदा॥
आद्यमेकादशे कुर्यात् त्रिपक्षे तु सपिण्डनम्"—इति।

पित्रोरनुगमनं विना सङ्घातमरणे मातुरनुगमनं विना दिनान्त-मरणेऽपि मातुस्त्रिपक्षे सपिण्डनं कुर्यात्। तथा च देवलः,—

"एकाहमरणे पित्रोरन्यस्यान्यदिने मृतौ।
सपिण्डनं त्रिपक्षे स्यादनुयानमृतिं विना"—इति॥

मातृपितृश्राद्धद्वयस्य दैवात्कालैक्येऽपि पितृश्राद्धं पूर्व्वं कुर्यात्। तदाह कार्ष्णाजिनिः,—

"पित्रोः श्राद्धे समं प्राप्ते नवे पर्युषितेऽपि वा।
पितृपूर्व्वं सुतः कुर्यादन्यत्रासत्तियोगतः"—इति॥

अन्यत्र मातृपितृव्यतिरिक्तविषये सम्बन्धासत्तियोगतः कुर्या-दित्यर्थः। यत्तु प्रचेतसोक्तम्,—

"नैकः श्राद्धद्वयं कुर्यात् समानेऽहनि कुत्रचित्"—इति॥

तदैकस्मिन् श्राद्धे क्रियमाणे दैवतैक्यात् यद्यन्यस्य प्रसङ्गात् सिद्धि-

---

* यथाकाले कुर्युः किन्तु,—इति ना०।

† पत्नी पुत्रः स्नुषा पौत्रो भ्रातृतत्तनया अपि,—इति मु०।

स्तद्विषयम्[१]। यथा नित्यश्राद्धामावास्याश्राद्धयोरमावास्याश्राद्धेन नित्यश्राद्धसिद्धिः प्रासङ्गिकी। यथा वा, दार्शिकयुगादिश्राद्धयोर्युगादिश्राद्धेनैव दार्शिकसिद्धिः[२]। पित्रोर्मृताहैक्ये सत्यन्वारोहणविषये लौगाक्षिणा विशेष उक्तः,—

"मृतेऽहनि समासेन पिण्डनिर्व्वपणं पृथक्।
नवश्राद्धन्तु दम्पत्योरन्वारोहणएव तु"—इति॥

पिण्डनिर्व्वपणं श्राद्धं समासेन पाकाद्यैक्येन पृथगसपत्नीकं[३] कुर्यात्। नवश्राद्धमपि तथा कुर्यात्। स्मृत्यन्तरमपि,—

"एकचित्यां समारूढौ दम्पती निधनं गतौ।
पृथक् श्राद्धं तथा कुर्यादोदनं न* पृथक् पृथक्"—इति॥

अनेकमातृभिरेकचित्यामन्वारोहणे कृते पाकाद्यैक्येन प्रथमं पितुस्तदनन्तरं साक्षान्मातुस्ततो ज्येष्ठादिक्रमेण कुर्यात्। तदाह भृगुः,—

---

* च,—इति मु०।

---

(१) अन्योद्देशेन प्रवृत्तावन्यस्यापि सिद्धिः प्रसङ्गः।

(२) तथा च अमावस्येतरत्र नित्यश्राद्धविधेः, युगादीतरत्र च दर्शश्राद्धविधेरनुष्ठानप्रयोजकत्वात् तत्तद्विधीनां प्रामाण्यमुपपद्यते। नित्यश्राद्धेनामावस्याश्राद्धसिद्धौ दर्शश्राद्धेन युगादिश्राद्धसिद्धौ चामावस्यादिश्राद्धविधीनां कुत्राप्यनुष्ठानप्रयोजकत्वाभावात् अप्रामाण्यं स्यादिति भावः। एवञ्च विशेषेण सामन्यसिद्धिर्न तु सामान्येन विशेषसिद्धिरिति तात्पर्य्यम्।

(३) तथाच पित्रोः श्राद्धं पृथगेव कुर्य्यात्, न तु पितुः श्राद्धं सपत्नीकं तथा कृत्वा तावतैव मातृश्राद्धं कृतं मन्येतेत्यर्थः।

"एककाले गतासूनां बहूनामथ वा द्वयोः ।
तन्त्रेण श्रपणं कुर्यात् श्राद्धं कुर्यात् पृथक् पृथक् ॥
पूर्व्वकस्य मृतस्यादौ द्वितीयस्य जघन्यतः ।
तृतीयस्य ततः कुर्यात् सन्निपातेष्वयं क्रमः"—इति ॥

पूर्व्वकस्य मुख्यस्य पितुः, द्वितीयस्य ततो जघन्याया जनन्याः, तृतीयस्य ततोऽपि जघन्यया मातुरित्यर्थः(१) । पार्वणैकोद्दिष्टयोः सन्निपाते जाबालिः,—

"यद्येकत्र भवेतान्तेदेकोद्दिष्टं च पार्वणम् ।
पार्वणं तत्र निर्वत्य एकोद्दिष्टं समाचरेत्*"—इति ॥

अनेकनिमित्तसन्निपाते निमित्तानुक्रमेण श्राद्धं कुर्यात् । तथा च कात्यायनः,—

"द्वे बहूनि निमित्तानि जायेरन्नेकवासरे ।
नैमित्तिकानि कार्याणि निमित्तोत्पत्त्यनुक्रमात्"—इति ॥

यद्यप्येकदेवताकश्राद्धद्वयमेकस्मिन्नहनि न युक्तं, एकानुष्ठानेनेतरप्रयोजनस्यापि प्रसङ्गात् सिद्धेः; तथापि नैमित्तिकानि वचनबलादनेकान्यप्यनुष्ठेयानि । तथा च जाबालिः,—

"श्राद्धं कृत्वा तु तस्यैव पुनः श्राद्धन्न तद्दिने ।
नैमित्तिकन्तु कर्त्तव्यं निमित्तानुक्रमोदयम्"—इति ॥

---

* एकोद्दिष्टन्तु निर्वर्त्य पार्वणं विनिवर्त्तयेत्,—इत्यन्यत्र पाठः ।

---

(१) मातृपदमत्र सपत्नीमातृपरं बोध्यम् ।

नित्यकाम्ययोरेकदेवताकयोः सन्निपाते काम्येनैव नित्यसिद्धिः। तदुक्तं स्मृतिसंग्रहे,—

"काम्यतन्त्रेण नित्यस्य तन्त्रं श्राद्धस्य सिध्यति"—इति॥

यत्राशौचविधानजातमजहत्स्वार्थप्रयुक्त्या दृशा
प्रोक्तं यत्र च संगृहीतवपुषां श्राद्धं मनुष्ठो पदम्।
अध्यायं तदवाप्यनिर्णयविदां तार्त्तीयमार्त्तिच्छिदं
सोऽयं व्याकृरुते स्वतन्त्रमहिमा मन्त्रीश्वरोमाधवः॥

इति श्रीमहाराजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-श्रीवीर-बुक्कभूपालसाम्राज्यधुरन्धरस्य माधवामात्यस्य कृतौ पराशरस्मृति-व्याख्यायां माधवीयायां तृतीयोऽध्यायः समाप्तः॥०॥

॥०॥ समाप्तञ्चाचारकाण्डम् ॥०॥

# शुद्धिपत्रम् ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् । |
|---|---|---|---|
| २ | १२ | कृता | कृती |
| ५ | २५ | स्मृतिष | स्मृतिषु |
| ६ | १० | व्युत्पत्त्य | व्युत्पित्स |
| १९ | १८ | त्विष्ठे | ज्येष्ठे |
| " | १९ | निर्व्विघ्नम | निर्व्विघ्नन् |
| २३ | २४ | पूर्व्वपक्षा | पूर्व्वपक्षी |
| २४ | १९ | तथा | तथा च |
| २८ | ८ | मु ा | मुनि |
| ३० | २२ | मुद्रितात्मविवेक | मुद्रितात्मतत्त्वविवेक |
| ३१ | २ | आसभ्यते | आरभ्यते |
| ३७ | २४ | चित्तम्य | चित्तस्य |
| ३८ | ६ | पारभते | मारभते |
| ४० | २७ | परिणाम्यमाणा | परिणाममाना |
| ४५ | १९ | इत्युक्त-प्र | इत्युक्त-स |
| ४६ | ९, १० | मी० अ० १ पा० २ सू० | मी० ६ अ० ८ पा० २२ सू० |
| ४७ | २० | प्रमात | प्रमीत |
| ५८ | १३ | धम्म | धर्म्मं |
| ५९ | २ | शिष्यैः | शिष्यैः, |
| ६१ | ८ | सव | सर्व्वे |
| ६९ | २१ | यस्य | तस्य |
| ७० | १२ | वत्सल | वत्सल ! |
| ७६ | २० | लक्षणमुच्यते | लक्षणे उच्येते |
| ८४ | २१ | नुणात्व | गुणात्व |
| ८६ | १२ | तत्त्वैकादशे | तत्त्वैकादशे |
| ९० | १० | भूलत्वेन | मूलत्वेन |
| ९२ | २१ | मल | मूल |
| ९६ | ३ | 'असङ्गम्य | ''असङ्गस्य |
| " | ११ | दहस्य | देहस्य |